# कथावस्तुसंक्षेपः ।

दीर्घतपसो नाम ब्रह्मर्षेः शापेन वर्षैकभोग्येन सकुटुम्बं श्वपाकतामवाप्य कुन्तिभोजनगरे प्रच्छन्नं निवसतः सौवीरराजस्यात्मजो विष्णुसेनोऽविनाम्नोऽसुरस्य मारणादविमारक इति लब्धापरनामा स्वमातुलस्य कुन्तिभोजस्य दुहितरं कुरङ्गीमुद्यानगतामञ्जनगिरिसंज्ञस्य मदगजस्य व्याकोपात् परित्रातवान् । तच्च लोकोत्तरमस्यात्युदारं कर्म शृण्वतः कुन्तिभोजस्यैतस्मिन्नसाधारणो बहुमान आसीद्, येन तस्मै कुरङ्ग्यपि दत्तैव भवेद्, यदि तस्मिन्नन्त्यजत्वशङ्का नाङ्कुशः स्यात् । तयोश्च कुरङ्ग्यविमारकयोः परस्परदर्शनेनाङ्कुरितोऽनुरागः क्रमेण परां कोटिं प्रतिपन्नः । अथ कुरङ्गीधात्र्या घटनया स कदाचिद् रात्रौ गूढं कुरङ्ग्या अन्तःपुरं प्रविश्य तत्र मदनेन चारित्रभ्रंशभयेन च व्याकुलितां कुरङ्गीं ललितसरसमुपुच्छन्दयन् रमयामास । ततः कुरङ्ग्याः प्रच्छन्नपुरुषसंप्रयोगशङ्किषु परीक्षणोद्यतेषु कन्यापुररक्षिषु, अविदित एव कन्यापुरादविमारको निर्गत्य कुरङ्गीपुनस्सङ्गमे निराशोऽग्निप्रसादलब्धजन्मत्वादात्मनोऽग्निपतनेऽप्यविकलतामभिवीक्ष्य भृगुपतनाय कञ्चित् पर्वतमारुरोह । तत्र यदृच्छया प्रियतमया सह विश्रमितुमवतीर्णः कश्चिद् विद्याधरोऽस्य वृत्तं संकल्पं च प्रणिधानेन परिज्ञाय कृपाविष्ट उदर्कशुभहेतुना केनाप्यङ्गुलीयकेन तं योजयामास, यद् दक्षिणाङ्गुलौ धृतं धर्तारं, तत्स्पृष्टं, तत्स्पृष्टस्पृष्टं चादृश्यान् करोति । ततस्तद् दक्षिणाङ्गुल्या स धारयन् संतुष्टनाम्ना स्ववयस्येन विदूषकेण सह कुरङ्ग्या अन्तःपुरमविशङ्कं प्रविश्य तत्र तया सह स्वैरं चिरं रेमे । कुन्तिभोजस्तु चिरं जामातृतयाभीप्सितस्याविमारकस्याकस्मिकेनादर्शनेन तथा व्याकुलो बभूव, यथा भागिनेयान्तरं काशिराजात्मजं जयवर्माणं कुरङ्ग्या वरणीयं मेने । अथ स कालेन सौवीरराजं स्वराजधान्यामेव गूढं निवसन्तमन्विष्योपलभ्य यावत् तद्वृत्तान्तं तस्मादेव शृणोति, तावत् तत्रागतान्नारदादविमारकस्यापि वृत्तं सर्वमवबुध्यते स्म । सुदर्शना च काशिराजमहिषी कुन्तिभोजसोदर्यात्मन एव पुत्रं तं प्रसूतमृतपुत्रायै स्वभगिन्यै सौवीरराजमहिष्यै सुचेतनायै प्रसूतिकाल एवात्मना समर्पितं नारदोद्बोधनात् सस्मार । अथ नारदः कुरङ्ग्यविमारकावन्तःपुरादानाय्य कुन्तिभोज-सौवीरराजादिसहित आशीर्भिरभिननन्द ॥

# श्लोकानुक्रमणी ।